# अन्धकासुरसंहारः

## जगन्नाथः

(पुष्पाञ्जलिः) रागः-नाटः

भो भोः स्फूर्जत्कलाढ्याः
सदयसहृदयाः स्वादुसाहित्यशुद्धाः!
स्वर्गोष्ठीसन्निभायां परिलसितरस-
श्रीशुभायां सभायाम् ।

भावोत्सं पर्व कुर्वन् शिशिरसुरभिलां
मारुतालीं वितन्वन्
बाढं सम्प्रीतसर्वः प्रसरतु हृदये-
ष्वेष पुष्पाञ्जलिर्वः ॥

(नाटरागः; चतुरश्र एकतालः)

हंहो हंहो पदं पदम् । हंहो हंहो पदं पदम् ।
हंहो हंहो पदं पदम् । हंहो हंहो पदं पदम् ।
नटनपटुतरं पदं पदम् । घटितनूपुरं पदं पदम् ।
गणचलनवरं पदं पदम् । गुणमनोहरं पदं पदम् ।
भूषणललितं पदं पदम् । दोषविरहितं पदं पदम् ।
श्रुतिहितनिनदं पदं पदम् । गतिलयविशदं पदं पदम् ।

(नाटरागः; चतुरश्र एकतालः, त्रिश्रगतिः)

नयनहृदयतर्पणं पदं पदम् ।
जयति कृतसदर्पणं पदं पदम् ।
त्वरितविहितताडनं पदं पदम् ।
स्फुरितधरणिपीडनं पदं पदम् ।
चलनबहुलकोमलं पदं पदम् ।

विलसदतिविनिर्मलं पदं पदम् ।
स्थलजकमलसंमितं पदं पदम् ।
मिलदनेकवेल्लितं पदं पदम् ।

(नाटरागः, मिश्रछापुतालः)

छविमनोज्ञपदं पदम् । भुवि विलासि पदं पदम् ।
तालसुभगपदं पदम् । बालशोणपदं पदम् ।

रसिकतोषि पदं पदम् । लसितभाषि पदं पदम् ।
सुहसितमिव पदं पदम् । अहह! चारु पदं पदम् ।

(ततः प्रविशति सूत्रधारः)

**सूत्रधारः** - अयि भो आर्ये नटि! यदि नेपथ्यविधानमवसितम्, आगम्यतां तावत् ।

**नटी** - आर्य सूत्रधार! इयमस्मि । आदेशाभिव्यञ्जनेनानुगृह्यताम् अयं जनः ।

**सूत्रधारः** - आर्ये! आदिष्टोऽस्मि नवीनसंविधान-सरससुन्दरवाग्झरीनिमज्जनकुतूहलतरलेन रसार्द्र-हृदयेन सहृदयसमुदयेन यथा गाननृत्यगाढवैभव-भावुकोत्सवभव्यं किमपि नाट्यं प्रयुज्यतामिति । तदद्य मैसूरवीयेन वेणुवादनसम्भवरसलोचन-निमीलनशीलेन जगन्नाथेन विरचितमन्धकासुर-संहारनामकं नृत्यगानसमुपबृंहितं नाट्यं प्रयोक्तु-मुद्यता वयम् ।

**नटी** - आर्य! रसोन्मीलनशीलानि बहूनि नाट्यानि लोके स्तोकेतरसंख्यया सन्दृब्धानि सुविदितानि । एवं सति, भवता प्रयुज्यमाने नूतनेऽस्मिन् अन्धकासुर संहारे को वाऽस्ति विशिष्टवस्तुविधानवान् स्वादिम-सुभगः परिपाकः ?

**सूत्रधारः** - श्रूयतां तावत् । अस्ति कश्चित् सकल-भावुकलोकहृदयङ्गमश्चारुपद-विन्यासशोभनगति-श्रेणिमान् कर्णाटकसङ्गीतशास्त्रपद्धतिशुद्धसङ्गीत-भङ्गीमङ्गीकुर्वन् नाट्यविशेषः । तेन नाट्य-विशेषेणाभिनेयोऽयं नाट्यप्रकारः ।

**नटी** - अहो साधु साधु । समुचितमेव नाट्यं विचितम् । अत्र नृत्यनिर्देशनस्य, गानक्रियायाः, मार्गदर्शनस्य च कृते कीदृश्यो व्यवस्थाः?

**सूत्रधारः** - नृत्यनिर्देशनं श्री/श्रीमती......करोति, यः/या ..... । गानव्यवस्था सर्वाऽपि श्रीमतः/श्रीमत्याः ...... अधीना यः/या...... । अपि च समग्रस्य कार्यक्रमजातस्य दिशादर्शनकर्तव्यभारं श्री/श्रीमती.....वहति यः/या......।

**नटी** - अहो हेम्नः परमामोद इवापूर्वोऽयं संयोगः । तर्हि शीघ्रमारभ्यतामिदं नाट्यं यद्वीक्षणेन व्योम्नीव डयनं करोमि, स्वर्गे इव विलासं रचयामि ।

(नेपथ्ये)

आः! किमिदं प्रलप्यते - स्वर्गे इव विलासं रचयामीति? विना मदीयामनुमतिं स्वर्गे प्रवेष्टुं कस्यापि अनुमतिर्नास्तीति किं न जानाति त्रिभुवनमिदम् ?

नटी - (सभयम्) आर्य! कस्येदं विरचितहृदय-तर्जितं निर्जितस्फूर्जथु च गर्जितम् ?

सूत्रधारः - (विलोक्य सातङ्कम्) अये! एष किल अन्धकासुरः तव स्वर्गशब्दोपन्यासमात्रेण समुद्दीपितकोपः प्रचुररोषावेश इत एवाभिवर्तते। तन्न सांप्रतमस्माकमत्र स्थातुम्। एहि, गच्छावः।

(इति निष्क्रान्तौ।)

इति प्रस्तावना

(प्रविश्य)

**अन्धकासुरः** - (पुनरपि ''आः किम्'' इत्यादि पठित्वा)

(भामिनीषट्पदीछन्दः)

झटिति घटनाभैरवीणां
तटिदिवोग्र-वि-निपतनानां
स्फुटितसुरजनसमुदयानामहह! मत्कानाम् ।
रटति को द्रष्टा किमन्तक-
भटसमूहवरातिभीकर-
नटनलीलाकारिणीनां रणकुशलतानाम् ॥

सतीष्वपि अप्सरस्सु लावण्यातिशयेन प्रसिद्धासु मन्मनोरञ्जनर्तनप्रवर्तनप्रौढकलापारावारपारीणासु कोऽपि साधारणो नटजनः किं स्वर्गं प्रविविक्षति?

आस्तां तावत् । अहमधुना उर्वशी-मेनका-रम्भा-तिलोत्तमानां नर्तनेन मनोविनोदं सम्पादयामि । कः कोऽत्र भोः?

**कश्चिद् राक्षसः** - (प्रविश्य) आज्ञापयतु राक्षसाधिपतिः ।

**अन्धकासुरः** - उच्यतामस्मद्वचनेन सर्वोऽप्यप्सरोगणो यथा नृत्यकार्यक्रमेण स्वर्गसिंहासनाधीश्वरो राक्षसाधिपतिः स्वान्तसम्मोदं सृज्यमानमिच्छति । तत्सर्वोऽप्यप्सरोगणो राक्षसाधिपतिचित्ताह्लाद-सम्पादनकौशलं कलयत्विति ।

**राक्षसः** - यथाज्ञापयत्यत्रभवान् राक्षसाधिपतिः ।

(ततः प्रविशन्ति अप्सरसो नृत्यन्ति च)

(हरिकाम्भोजीरागः, आदितालः ।)

नृत्यामो व्यूहशो वयं विभङ्गिभेदा
जयति मधुरगायनेन गीरुपात्तनादा ।
नवविधानयोजितेन बर्हिणबहुभावितेन
विभ्रमेण समजवेन नृत्यं तक-तझण-तोम् ।
पादालिङ्गनभराणि मञ्जुलशिञ्जितकराणि
भान्ति रत्ननूपुराणि नृत्यं तक-तझण-तोम् ।
नटमयूरवरसुहृत्सु हृदयरञ्जयितृषु सत्सु
कुटिलचलनपटुषु पत्सु नृत्यं तक-तझण-तोम् ।

कृत्वा परिहासनर्म धृत्वा समुपचितशर्म
गत्वा रसवेदमर्म नृत्यं तक-तझण-तोम् ॥

(अप्सरसो निर्गच्छन्ति ।)

**अन्धकासुरः** - (सगर्वं) हह्हह्ह!

अन्धकासुरनामकेन मया हितं सुरसाधितं
दानवाजिपराजयप्रतिशोधनेन हि बाधितम् ।

अन्धकारभवोऽस्मि शोकविलापरूपभयङ्करी
वर्तना मम यत्पुरो भुवनत्रयी किल किङ्करी ॥

तामसीपरिमग्नलोकसमुद्धृतिक्षम भानुमान्
कोऽपि नास्ति सुरेषु संप्रति यो ददाति रसागमान् ।
भ्राजते तरलं ममैव यशोध्वजं दृढमेचकं
कम्पनैर्हि दिवो ललाटविलेखनैरिव रोचकम् ॥

अहह ! (इति निष्क्रान्तः)

(ततः प्रविशन्ति देवाः)

**देवाः** - (सविस्मयम्)

समस्तलोकपुण्यपुञ्जपाकनिर्मितो हृदा
चमत्कृताखिलप्रभूतसूतविस्मयः सदा ।
शमादिसद्गुणाढ्यलोकसद्म कोटिशृङ्गवान्
हिमालयो नगाधिराज एष राजते महान् ॥

वसुन्धराननं महाप्रसादशुद्धिसुन्दरं
सुपर्वकन्यकोपयुज्यमानदर्पणोऽथवा ।

ददाति चिन्तनं प्रकारयुग्ममेवमद्भुतो
हिमालयोऽयमीक्षितः कुतूहलेन जीविनाम् ॥

घनीभवन्महोद्धदुग्धसिन्धुरेष निर्मलो
घनावलीपटावृतं गिरीशनर्तनाङ्गणम् ।
निसर्गवीक्षणाय दुर्गमेवमत्र धिष्ठितं
हिमालयोऽतिशोभनो मनोरमो महीतले ॥

अहो त्रिपुरपर्वतप्रकटपविः पाण्डित्यप्रचण्डो भगवान् भवो दुर्भावमहिषनिर्भेदनिपुणया भगवत्या भवान्या साकमित एवाभिवर्तते । तं वन्दामहे ।

(शिवपार्वत्यौ प्रविशातः)

देवाः - (दण्डकेन स्तुवन्ति ।)

१. जय जय महेश गिरीशादिदेव प्रसिद्धप्रभाव द्रुत-क्षेमकारिन् भवोत्पन्नसर्वाशुभादिप्रहारिन् मनोरम्य-शुभ्राङ्गसंसूचितस्फीतसत्त्वाकृते वेदसिद्धान्तनिर्णीत-तत्त्वाकृते दिव्यगङ्गान्तरङ्गस्फुरद्भूधरेन्द्रप्रतिष्ठापित-स्वीयपादाम्बुजद्वन्द्ववन्दारुकल्याणनिष्ठ प्रभो!

२. पुरहर विनाशितदुर्गर्ववद्राक्षसव्रात नाकस्थली-नित्यनृत्योत्सवामोदसंभावनाहृष्टचेतोविलासापगा-भूषितस्वोत्तमाङ्गातिशोभिन् विभो!!

३. विधृतशीतलभानो, महीध्रप्रियात्मोद्भवापाणि-पीडामहानन्दसान्द्रश्रितानेकपश्चात्तपद्भक्तिभाव-प्रकारादियुक्त क्षणध्वंसिसंसारकान्तारदुर्गा-ध्वपातातिदुःखेषु जीविष्वमोघं दिशादर्शनं कर्तु-मार्द्रानुकम्पं धरस्युग्रनेत्रत्रय!

**शिवः**- अये देवाः! किमिति भवतां सर्वेषामपि वदनं शिशिरकालिकहिमपातनिमीलितनलिनमिव नष्टकान्ति सन्तनोति सन्तापमस्माकम् ?

देवाः - (गायन्ति)

(वकुलाभरणरागः-आदितालः)

देव, कृपाकूपार, सुरलोकं सशोकं पालय
शरणं श्रयामो भवत्पदं परमेव सङ्कटमन्धकजम् ।

दयया रचय संमोदं दलयन् निर्जरखेदं
सुखपीयूषविनोदं सृज भावनया रसवेदम् ॥

त्रिदिवं महेन्द्रीयं; क्रूरं रिपुराक्रामदतीवारं
कुरु यातुधानसंहारं हर देवसङ्कुलगं भारम् ॥

पार्वती - देव, एतैः किमुच्यते ? कोऽयमन्धकासुरः?

शिवः - देवि, अन्धकारो नाम, अज्ञानम् । अज्ञानस्यैव मूर्तरूपम् अन्धकासुरो नाम । लोकानां यदज्ञानं तेनैवाज्ञानेन जातोऽयमन्धकासुरः ।

पार्वती - अवगतम् । अन्धकाराख्यस्याज्ञानस्य निवारणार्थं किं न कोऽप्यस्त्यभ्युपायः ?

**शिवः** - अस्त्येव । परन्तु तस्याभ्युपायस्य ज्ञानात् प्रागज्ञानस्य स्वरूपमवगन्तव्यम् ।

**पार्वती** - अवहितास्मि । बोध्यताम् ।

**शिवः** - अज्ञानं नामावरणम् । आवरणे नष्टे शुद्ध आनन्दः स्वयं प्रकाशते । शोकमोहादिरूपावरणे खण्डिते वर्तमानमेव चैतन्यं रसरूपेण प्रकाशते । यथा भूगर्भे वर्तमानमेव सलिलं कुद्दालाद्युपकरणैः प्रस्तरमृदाद्यपनयनेन प्रकाशते तद्वत् । अत्रापि अन्धकासुरखण्डनार्थं कुद्दालाद्युपकरणसधर्मा कश्चन नाट्यायुधं प्रयुज्यते ।

**पार्वती** - अधुना सर्वमपि स्पष्टीभूतम् । कदाचिद्भवतैवोक्तपूर्वं यथा नाट्यवृत्तयश्चतुर्विधाः सन्तीति । तदुल्लेखनपूर्वकं नाट्यमारभ्यताम् । त्वया सार्धमहमपि साधुनृत्यसङ्गतिं सम्पादयामि ।

अन्धकासुरखण्डनार्थं कुद्दालाद्युपकरणसधर्मा कश्चन नाट्यायुधं प्रयुज्यते ।

**पार्वती** - अधुना सर्वमपि स्पष्टीभूतम् । कदाचिद्भव-तैवोक्तपूर्वं यथा नाट्यवृत्तयश्चतुर्विधाः सन्तीति । तदुल्लेखनपूर्वकं नाट्यमारभ्यताम् । त्वया सार्धमहमपि साधुनृत्यसङ्गतिं सम्पादयामि ।

**शिवः** - साधूक्तं भवत्या । काले स्मारितोऽस्मि । अस्तु । (देवानुद्दिश्य) मा भवन्तो बिभ्यतु । यतः -

(शिवपार्वत्यौ नृत्यतः ।)

(बेहाग् रागः आदितालः विलम्बकालः)

विदधामि भारतीं सात्त्वतीं कैशिकीम् आरभटीम्
मुदमातनोमि पाठ्येन अभिनयेन गानेन रसेनापि ।

वचनवैखरीरम्यां चतुरचिन्तनेन गम्यां
रचनमातनोमि नव्यां समुपयुज्य गिरां भव्याम् ।

मोदसारवीतशोका सरसलोकहर्षपाका
नादसौख्यदा सृज्यते हृदयं स्पृशन्ती कला ।
सान्द्रशृङ्गारलीला बहुलचारुचित्रशीला
इन्द्रजालरौद्रवेषा घोरकोलाहलघोषा ।

**देवेन्द्रः** - अहो साधु कृतोऽभिनयः । अधुना किम् अन्धकासुरसंहाराय प्रतिष्ठते भवान् ।

**शिवः** - (सस्मितम्) नैव । प्रथमतो दूतसंप्रेषणेन साम प्रयोक्तव्यम् । उक्तञ्च - (वार्धकषट्पदी छन्दः)

शरणं न कस्यापि निजदन्तभञ्जनं
गिरमस्खलितमेव निःसारयेन्मुखा-
दुरुसूचनाशुद्धसिद्धान्तसङ्गतां विबुधः पुरस्ताद् रिपोः।
दरतोऽपि चेदादरोऽत्र प्रदर्श्येत
दुरितौघसंभवनमणुशोऽपि नास्त्येव
करिराट् किमाहूयते पिपीलकयैव कर्तुमर्हं विधातुम् ? ॥

**देवेन्द्रः** - अवितथमाह भगवान् । को दूत इदानीं भवितुमर्हति?

**शिवः** - अग्निमुखनामाऽसौ गणेश्वरो गच्छति ।

(इति निष्क्रान्ताः सर्वे)

(ततः प्रविशत्यग्निमुखः)

**अग्निमुखः** - अग्निमुखनामधेयेन मया भगवतः शिवस्याज्ञानुवर्तिना साम्प्रतमाक्रान्तस्वर्ग-सिंहासनोऽन्धकासुरो बहुधा साम्ना विज्ञप्तः

स्वर्गत्यागाय । परन्तु मूर्खेषु मोदकोक्तयो मन्दी-भवन्ति । स राक्षसाधमो भगवन्तं भवानीवल्लभमेव धिक्करोति । अधुना किं करणीयम् ? भवतु, दृष्टम् । तत्रभवन्तं शिवमेव पृच्छामि । (इति निष्क्रान्तः ।)

(ततः प्रविशति सक्रोधोद्वेगोऽन्धकासुरः ।)

**अन्धकासुरः** - (साटोपम्) आः! दूतेन मामाज्ञापयति शिवनामकः कोऽपि कीटः!

(अठाणाराग:; आदिताल:-विलम्बकाल: ।)

कोऽसौ शिवाभिधो जीवी गर्ववान्

गतशङ्कोऽसौ

गिरिखनकोऽसौ

मतिविरहविगलदालोको निर्भीको

भवहतको वृतान्तकोऽसौ

दासीकृतामरे दापयन् देशनाम् ।

सर्वाणि विश्वानि मे नामतो विकम्पन्ते

शर्वो न जानाति प्रसृमरं मे बलम् ।

सङ्गरे हननमरणादिबहुघोरे देवादयो मया

सङ्गमं कारिता वैवस्वतेन ध्रुवम् ।

वाचाऽवधीरणा तादृशे कार्यते

नीचेन विकटरटनेन दलितधिया सन्धये सूच्यते ॥

अये! किमिदम्! रसप्रकाश इव दृश्यते? आः! मयि सति अन्धकासुरे कोऽयं प्रकाशः स्पन्दितुमपि ?

**शिवः पार्वती च** - दुष्ट अन्धक! तव दुरीहाभृत्यं कृत्यं नाशयितुमागतौ स्वः ।

**अन्धकः** - (साट्टहासं) कोऽपि मां नाशयितुं न शक्नोति । अज्ञानमेव मम खड्गः । कलाज्ञान-विहीनतैव मम धनुः ।

**शिवः** - (विहस्य) आं सत्यम् । परन्तु रसोन्मीलनशीलनकौशलकारिणा नाट्यायुधेन सकृत् स्पृष्टस्त्वं कां गतिं गच्छसि!

**अन्धकः** - रसोन्मीलनमिति ? रसोन्मीलनं कदाऽपि न सम्भवमन्धकसाम्राज्ये ।

**शिवः** - तत् सत्यम् । तस्मादेव त्वमधुना हन्यसे रसोन्मीलनाय ।

अन्धकः - (शरषट्पदीछन्दः)

वमदस्रं शी-
र्षमिदानीं ते
मम खड्गोऽयं पातयति ।
भ्रममतिगर्व
क्रमजातमपि
श्रमलेशेन विना पश्य ॥

शिवः - (कुन्तलवराळीरागः चतुरश्रत्रिपुटतालः त्रिश्रगतिः ।)

लोककण्टकासुर! स्वीकुरु प्रहरणं सहसा मरणम्
नाकवासिभीतिजननिरत संप्रति कं प्रति धावसि ?
मानितहतबुद्धे नाशितनिजसिद्धे ।
दानवादिमूढवन्द्य शूलमिदं सहतां तव भुजयुगलम्
अन्धकार ते विलयनतो बन्धनाद् विमुच्यते
सिन्धुराशु रसपूर्णो भुवनमिदं पूरयति ।

दीर्घशोकपाशो भ्राजते प्रकाशो
वर्णनातिगां धरति प्रीतिं त्रिदशानां परिषदियम् ॥

(अन्धकासुरः म्रियते ।)

(ततः प्रविशन्ति देवाः, नीराजनगीतं च गायन्ति

देवाः - (द्विजावन्तीरागः । खण्डछापुतालः ।)

नीराजनं सुमनोनीराजनम्

रसवेदमर्मविदे देवतागणसुहृदे
नीराजनं सुमनोनीराजनम् ।

धवलभानुधराय सितविभूतिभराय
गौरीप्रियकराय नीराजनम् ।

भावुकवरं ददते हिमपर्वते वसते
योगिहृदये स्फुरते नीराजनम् ।

ज्योतिराकाराय दैत्यसंहाराय
ज्ञातव्यसाराय नीराजनम् ।

स्मितचारुवदनाय सुकृतिमतिसदनाय
परिदग्धमदनाय नीराजनम् ।

अन्धकविनाशकृते लसदसमकान्तिभृते
वेदनानिचयहृते नीराजनम् ।

हिमसुतासचिवाय भवनाशनभवाय
नाट्यराजशिवाय नीराजनम् ।

Date of uploading: 28.11.2015

Author and Music composer: S.Jagannatha,Mysore.

This is a dance-drama.Theme: Lord Śiva slays a demon namely Andhaka.Andhaka means darkness and symbolizes ignorance. *Rasa* removes Andhaka. This *Rasa* is produced by Nāṭya.

S.Jagannatha is author of :

*Asta-vyasta* ( a humorous drama on promoting Saṁskr̥ta)

*Ābhāṇakajagannātha*(Original proverbs in Saṁskr̥ta)

*Dve mukhe* (Two humorous *kāvya*s : *Mogha-dūta* and *Lokālaṅkārapaṅkīya* )

(These three above mentioned works are available for free download from Archives)

*Grantha-saṁpādana-śāstra* (A treatise on Manuscriptology) etc..

He has edited *Guruśiṣyasaṁvāda* of Appaya Śivācārya

His ambition is to become full-fledged Saṁskṛta writer.

Please send your comments to: jgrantha@gmail.com